केशवादिकञ्च सशतक्रतुपूर्वकञ्च
सम्पूजयेद्विमलधीः पुनरङ्गतोऽन्ते ॥ ५३
नाकारजेऽङ्गतोऽन्ते प्रपूजयेन्मूर्तिशक्तिलोकेशान् ।
रावर्णजे तु मूर्तीः श्रीभूमायामनोन्मथनीश्च यजेत ॥ ५४
ह्रीः श्री रतिः सपुष्टिर्मोहनिमाये महादियोगाद्ये ।
माये च तृतीयावृतिरन्यदशेषं पुरैव निर्दिष्टम् ॥ ५५
यकारजेऽरिशङ्खौ च सगदाहलशार्ङ्गकाः ।
मुसलः खड्गशूलौ च तृतीया णाक्षरोद्भवे ॥ ५६
शेषो वासुकितक्षककर्कोटकपङ्कजमहापद्माः ।
दरपालकुलिकाख्यौ तृतीयमन्यत् समं विधानेऽन्त्ये ॥ ५७
अङ्गैः प्रथमावरणं मूर्तिभिरपि शक्तिभिर्द्वितीयमपि ।
अन्ये केशवकेत्वादिभ्यां स्यात् पञ्चमञ्च मत्स्याद्यैः ॥ ५८
मत्स्यः कूर्मवराहौ नृसिंहकुब्जकिरामकृष्णाश्च ।
कल्किः सानन्तात्मा पुनरमृतात्मा च षष्ठमहिपाद्यैः ॥ ५९
सप्तममपि लोकेशैरष्टममपि तदायुधैश्च संप्रोक्तम् ।
प्रागुक्तेषु विधानेष्वालब्ध्य नोक्तमत यत्तदपि ॥ ६०
अष्टाक्षराक्षरविधानचतुष्कयुग्मं
प्रोक्तक्रमेण विधिनाऽभियजेद् य एनम् ।
भक्त्या मुकुन्दमनुजापरतो नराग्र्यः
प्राप्नोति वाञ्छितमयत्नत एव कामम् ॥ ६१
इति श्रीप्रपञ्चसारे विंशः पटलः ।

विमलधीरिति । मूर्त्यावरणमन्त्रभेदाः मूर्त्यावरणे तत्तदक्षरानन्तरमारभ्य पूजाक्रमश्च सूचितः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

आलब्धमिति । किरीटमन्त्रपुष्पाञ्जल्यादिक्रमेष्वपि विधानेषु द्रष्टव्य-मित्यर्थः ॥ ६० ॥ ६१ ॥

इति श्रीपद्मपादाचार्यकृते प्रपञ्चसारविवरणे
विंशतिः पटलः ।